६१

हर्तुर्याति न गोचरं, किमपि शं पुष्णाति यत्सर्वदा
ह्यर्थिभ्यः प्रतिपाद्यमानमनिशं
प्राप्नोति वृद्धिं पराम्।
कल्पान्तेष्वपि न प्रयाति निधनं, विद्याख्यमन्तर्धनं
येषां तान्प्रति मानमुज्झत नृपाः; कस्तैः सह स्पर्धते ?

वृत्त — शार्दूल°

६२

प्राणाघातान्निवृत्तिः, परधनहरणे संयमः,
सत्यवाक्यं,
काले शक्त्या प्रदानं,
युवति-जन-कथा-मूकभावः परेषाम्।
तृष्णास्रोतोविभङ्गो, गुरुषु च विनयः,
सर्वभूतानुकंपा,
सामान्यः सर्वशास्त्रेष्वनुपहतविधिः,
श्रेयसामेष पन्थाः ॥

वृत्त — स्रग्धरा

६३

क्षान्तिश्चेत्कवचेन किं? किमरिभिः क्रोधोऽस्ति
चेद्देहिनां?
ज्ञातिश्चेदनलेन किं? यदि सुहृद् दिव्यौषधैः
किं फलम्?
किं सर्पैः यदि दुर्जनाः? किमु धनैर्विद्यानवद्या यदि?
व्रीडा चेत्किमु भूषणैः?, सुकविता यद्यस्ति
राज्येन किम्? ॥

वृत्त — शार्दूल०

६४

वने रणे शत्रुजलाग्निमध्ये
महार्णवे पर्वतमस्तके वा।
सुप्तं प्रमत्तं विषमस्थितं वा
रक्षन्ति पुण्यानि पुराकृतानि ॥

वृत्त — उपजाति.

६५

या साधूंश्च खलान्करोति,
विदुषो मूर्खान्, हितान्द्वेषिणः,
प्रत्यक्षं कुरुते परोक्षम्, अमृतं हालाहलं तत्क्षणात्।
तामाराधय सत्क्रियां भगवतीं भोक्तुं फलं वाञ्छितं
हे साधो! व्यसनैर्गुणेषु विपुलेष्वास्थां वृथा मा कृथाः॥

वृत्त — शार्दूल०

६६

यत्रानेके क्वचिदपि गृहे तत्र तिष्ठत्यथैको
यत्राप्येकस्तदनु बहवस्तत्र नैकोऽपि चान्ते ।
इत्थं चेमौ रजनिदिवसौ दोलयन् द्वाविवाक्षौ
कालः काल्या भुवनफलके क्रीडति प्राणिसारैः ॥

वृत्त — मन्दाक्रान्ता.

पाठान्तर — ४. भुवनफलके–सह बहुकलः ( बहुकलम् वा )

६७

भ्रान्तं देशमनेकदुर्गविषमं प्राप्तं न किञ्चित्फलं,
त्यक्त्वा जातिकुलाभिमानमुचितं सेवा कृता
निष्फला ।
भुक्तं मानविवर्जितं परगृहेष्वाशंकया काकवत्,
तृष्णे ! जृम्भसि पापकर्मनिरते नाद्यापि संतुष्यसि ॥

वृत्त — शार्दूल°

६८

नायं ते समयो, रहस्यमधुना, निद्राति नाथो, यदि
स्थित्वा द्रक्ष्यसि कुप्यति प्रभुरिति,
द्वारेषु येषां वचः ।
चेतस्तानपहाय याहि भवनं देवस्य विश्वेशितुः
निर्दौवारिकनिर्दयोक्त्यपरुषं निःसीमशर्मप्रदम् ॥

वृत्त — शार्दूल°

पाठान्तर — ४. °निर्दयोक्त्यपरुषं–°निर्दयोक्तपरुषं

६९

अजानन्माहात्म्यं पततु शलभो दीपदहने
स मीनोऽप्यज्ञानाद्बडिशयुतमश्नातु पिशितम् ।
विजानन्तोऽप्येते वयमिह विपज्जालजटिलान्
न मुञ्चामः कामान् अहह ! गहनो मोहमहिमा ॥

वृत्त — शिखरिणी.

७०

यावत्स्वस्थमिदं शरीरमरुजं यावज्जरा दूरतो
यावच्चेन्द्रियशक्तिरप्रतिहता यावत्क्षयो नायुषः ।
आत्मश्रेयसि तावदेव विदुषा कार्यः प्रयत्नो महान्
प्रोद्दीप्ते भवने तु कूपखननं प्रत्युद्यमः कीदृशः ॥

वृत्त — शार्दूल°

पाठान्तर — ४. प्रोद्दीप्ते–संदीप्ते

७१

फलमलमशनाय, स्वादु पानाय तोयं,
शयनमवनिपृष्ठं, वल्कले वाससी च ।
नवधनमधुपानभ्रान्तसर्वेन्द्रियाणां
अविनयमनुमन्तुं नोत्सहे दुर्जनानाम् ॥

वृत्त — मालिनी.

७२

विपुलहृदयैर्धन्यैः कैश्चिज्जगज्जनितं पुरा,
विघृतमपरैर्, दत्तं चान्यैर्विजित्य तृणं यथा।
इह हि भुवनान्यन्ये धीराश्चतुर्दश भुञ्जते,
कतिपयपुरस्वाम्ये पुंसां क एष मदज्वरः॥

वृत्त — हरिणी.

पाठान्तर — विपुल हृदयैः — विपुलमतिभिः

७३

त्वं राजा, वयमप्युपासितगुरुप्रज्ञाभिमानोन्नताः,
ख्यातस्त्वं विभवैर्, यशांसि कवयो
दिक्षु प्रतन्वन्ति नः।
इत्थं मानधनातिदूरमुभयोर् अप्यावयोरन्तरं
यद्यस्मासु पराङ्मुखोऽसि,
वयमप्येकांततो निस्पृहाः॥

वृत्त — शार्दूल°

पाठान्तर — ३. मानधनाति° — मानद नाति°

७४

अभुक्तायां यस्यां क्षणमपि न यातं नृपशतैः
भुवस्तस्या लाभे क इव बहुमानः क्षितिभुजाम्।
तदंशस्याप्यंशे तदवयवलेशेऽपि पतयो
विषादे कर्तव्ये विदधति जडाः प्रत्युत मुदम्।

वृत्त — शिखरिणी.

७५

मृत्पिण्डो जलरेखया वलयितः सर्वोऽप्ययं नन्वणुः
भागीकृत्य तमेव संयुगशतै राज्ञां गणा भुञ्जते ।
तद्दद्युर्ददतेऽथवा न किमपि क्षुद्रा दरिद्रा भृशं
धिग्धिक्तान् पुरुषाधमान्धनकणं
वाञ्छन्ति तेभ्योऽपि ये ॥

वृत्त — शार्दूल°

७६

गंगातरंगहिमशीकरशीतलानि
विद्याधराध्युषितचारुशिलातलानि ।
स्थानानि किं हिमवतः प्रलयं गतानि
यत्सावमानपरपिण्डरता मनुष्याः ॥

वृत्त — वसंततिलका.

पाठान्तर — १. °हिमशीकर° — °कणशीकर°

७७

ब्रह्माण्डमण्डलीमात्रं किं लोभाय मनस्विनः ।
शफरीस्फुरितेनाब्धेः क्षुब्धता जातु जायते ?

वृत्त — अनुष्टुप्.

पाठान्तर — २. जातु जायते ? — न तु जायते

७८

स्वल्पं स्नायुवसावशेषमलिनं निर्मांसमप्यस्थिकं
श्वा लब्ध्वा परितोषमेति न तु तत्
तस्य क्षुधाशान्तये ।
सिंहो जंबुकमङ्कमागतमपि त्यक्त्वा निहन्ति द्विपं
सर्वः कृच्छ्रगतोऽपि वाञ्छति जनः
सत्त्वानुरूपं फलम् ॥

वृत्त — शार्दूल°

७९

अमीषां प्राणानां तुलितबिसिनीपत्रपयसां
कृते किं नास्माभिर्विगलितविवेकैर्व्यवसितम् ।
यदाढ्यानामग्रे द्रविणमदनिःसंज्ञमनसां
कृतं वीतव्रीडैर्निजगुणकथापातकमपि ॥

वृत्त — शिखरिणी.

८०

परेषां चेतांसि प्रतिदिवसमाराध्य बहु हा
प्रसादं किं नेतुं विशसि हृदय ! क्लेशकलिलम् ।
प्रसन्ने त्वय्येव स्वयमुदितचिंतामणिगुणे
विमुक्तः संकल्पः किमभिलषितं पुष्यति न ते ॥

वृत्त — शिखरिणी.

पाठान्तर — ३. त्वय्येव — त्वय्यन्तः

८१

क्वचिद्वीणावाद्यं, क्वचिदपि च हाहेति रुदितं
क्वचिद्विद्वद्गोष्ठी, क्वचिदपि सुरामत्तकलहः ।
क्वचिद्रामा रम्याः, क्वचिदपि गलत्कुष्ठवपुषो,
न जाने संसारः किममृतमयः किं विषमयः ॥

वृत्त — शिखरिणी.

पाठान्तर — १. वीणावाद्यं — वीणावादः

८२

समारम्भा भग्ना कति न कतिवारांस्तव पशो !
पिपासोस्तुच्छेऽस्मिन् द्रविणमृगतृष्णार्णवजले ।
तथापि प्रत्याशा विरमति न तेऽद्यापि शतधा
न दीर्णं यच्चेतो नियतमशनिग्रावघटितम् ॥

वृत्त — शिखरिणी.

८३

तपस्यन्तः सन्तः किमधिनिवसामः सुरनदीं
गुणोदारान् दारानुत परिचरामः सविनयम् ।
पिबामः शास्त्रौघान्, उत विविधकाव्यामृतरसान्,
न विद्मः किं कुर्मः कतिपयनिमेषायुषि जने ॥

वृत्त — शिखरिणी.

पाठान्तर — २. सविनयम् — सविनयान्

८४

तुङ्गं वेश्म, सुताः सतामभिमताः,
संख्यातिगाः संपदः
कल्याणी दयिता, वयश्च नवमित्यज्ञानमूढो जनः ।
मत्वा विश्वमनश्वरं निविशते संसारकारागृहे;
संदृश्य क्षणभंगुरं तदखिलं धन्यस्तु संन्यस्यति ॥

वृत्त — शार्दूल°

८५

यद्वक्त्रं मुहुरीक्षसे न धनिनां, ब्रूषे न चाटुं मृषा,
नैषां गर्वगिरः शृणोषि, न पुनः
प्रत्याशया धावसि ।
काले बालतृणानि खादसि, सुखं
निद्रासि निद्रागमे,
तन्मे ब्रूहि कुरंग ! कुत्र भवता किं नाम तप्तं तपः ॥

वृत्त —शार्दूल°

८६

किं कन्दाः कन्दरेभ्यः प्रलयमुपगता,
निर्झरा वा गिरिभ्यः
प्रध्वस्ता वा तरुभ्यः सरसफलभृतो
वल्कलिन्यश्च शाखाः ।
वीक्ष्यन्ते यन्मुखानि प्रसभमपगतप्रश्रयाणां खलानां
दुःखोपात्ताल्पवित्तस्मयवशपवनानर्तितभ्रूलतानि ॥

वृत्त — स्रग्धरा.

८७

गंगातीरे हिमगिरिशिलाबद्धपद्मासनस्य
ब्रह्मध्यानाभ्यसनविधिना योगनिद्रां गतस्य ।
किं तैर्भाव्यं मम सुदिवसैर्यत्र ते निर्विशङ्काः
संप्राप्स्यन्ते जरठहरिणाः शृङ्गकण्डूविनोदम् ॥

वृत्त — मन्दाक्रान्ता.

पाठान्तर — ४. – कण्डूयन्ते जरठहरिणाः स्वाङ्गमङ्गे मदीये,
अथवा °शृङ्गमङ्गे मदीये ।

८८

धन्यानां गिरिकन्दरे निवसतां
ज्योतिः परं ध्यायतां
आनन्दाश्रुजलं पिबन्ति शकुना निःशंकमङ्केशयाः।
अस्माकं तु मनोरथोपरचितप्रासादवापीतट-
क्रीडाकाननकेलिकौतुकजुषाम् आयुः परिक्षीयते ॥

वृत्त — शार्दूल°

८९

अहौ वा हारे वा बलवति रिपौ वा सुहृदि वा
मणौ वा लोष्ठे वा कुसुमशयने वा दृषदि वा ।
तृणे वा स्त्रैणे वा मम समदृशो यान्ति दिवसाः
क्वचित्पुण्यारण्ये शिव शिव शिवेति प्रलपतः ॥

वृत्त — शिखरिणी.

पाठान्तर — ३. यान्ति – यान्तु ।

९०

अवश्यं यातारश्चिरतरमुषित्वापि विषयाः
वियोगे को भेदस्त्यजति न जनो यत्स्वयममून् ।
व्रजन्तः स्वातंत्र्यादतुलपरितापाय मनसः
स्वयं त्यक्त्वा ह्येते शमसुखमनन्तं विदधति ॥

वृत्त — शिखरिणी.

९१

कर्मायत्तं फलं पुंसां बुद्धिः कर्मानुसारिणी ।
तथापि सुधिया भाव्यं सुविचार्यैव कुर्वता ॥

वृत्त — अनुष्टुप्.

पाठान्तर — १. तथापि – तस्माद्धि ।

९२

नमस्यामो देवान्, ननु हतविधेस्तेऽपि वशगाः;
विधिर्वन्द्यः, सोऽपि प्रतिनियतकर्मैकफलदः ।
फलं कर्मायत्तं, किममरगणैः, किं च विधिना;
नमस्तत्कर्मभ्यो विधिरपि न येभ्यः प्रभवति ॥

वृत्त — शिखरिणी.

९३

ब्रह्मा येन कुलालवन्नियमितो ब्रह्माण्डभाण्डोदरे
विष्णुर्येन दशावतारगहने क्षिप्तो महासंकटे ।
रुद्रो येन कपालपाणिपुटके भिक्षाटनं कारितः
सूर्यो भ्राम्यति नित्यमेव गगने, तस्मै नमः कर्मणे ॥

वृत्त — शार्दूल°

९४

खल्लोल्लापाः सोढाः कथमपि तदाराधनपरैः;
निगृह्यान्तर्बाष्पं हसितमपि शून्येन मनसा ।
कृतश्चित्तस्तम्भः; प्रतिहतधियामञ्जलिरपि;
त्वमाशे मोघाशे किमु परमतो नर्तयसि माम् ॥

वृत्त — शिखरिणी.

पाठांतर — ४. किमुपरमतो – किमपरमतो ।

९५

दीना. दीनमुखैः सदैव शिशुकैराकृष्टजीर्णाम्बरा
क्रोशद्भिः क्षुधितैर्नरैर्न विधुरा दृश्येत चेद्गेहिनी।
याञ्चाभङ्गभयेन गद्गदगलत्त्रुट्यद्विलीनाक्षरं
को 'देहीति' वदेत्स्वदग्धजठरस्यार्थे मनस्वी जनः ॥

वृत्त— शार्दूल°

पाठान्तर — २. नरैर्न विधुरा — निरन्नविधुरा

९६

क्षान्तं न क्षमया, गृहोचितसुखं त्यक्तं न संतोषतः,
सोढा दुःसहशीतवाततपनाः क्लेशान्न तप्तं तपः।
ध्यातं वित्तमहर्निशं नियमितप्राणैर्न शंभोः पदं,
तत्तत्कर्म कृतं यदेव मुनिभिस्तैस्तैः फलैर्वंचिताः ॥

वृत्त —शार्दूल°

१७

ब्रह्मज्ञानविवेकिनोऽमलधियः कुर्वन्त्यहो दुष्करं
यन्मुञ्चन्त्युपभोगवन्त्यपि धनान्येकान्ततो निःस्पृहाः।
न प्राप्तानि पुरा न संप्रति न च प्राप्तौ दृढप्रत्ययो
वाञ्छामात्रपरिग्रहाण्यपि परं
त्यक्तुं न शक्ता वयम् ॥

वृत्त — शार्दूल°

पाठान्तर — १. °विवेकिनोऽमलधियः— °विवेकनिर्मलधियः
२. यन्मुञ्चन्त्युपभोगवन्त्यपि धना° — यन्मुञ्च-
न्त्युपभोगकाञ्चनधना°

१८

इयत्येतस्मिन्वा निरवधिचमत्कृत्यतिशये
वराहो वा राहुः प्रभवति चमत्कारविषयः ।
महीमेको मग्नां यदयमवहद्दन्तसलिलैः
शिरःशेषः शत्रुं निगिलति परं संत्यजति च ॥

वृत्त — शिखरिणी.

पाठान्तर — ३. दन्तसलिलैः— °दन्तमुकुलैः। केटलाक
'दन्तसलिले' पाठ सूचवे छे

९९

पातालान्न विमोचितो बत बली,
नीतो न मृत्युः क्षयं,
नो मृष्टं शशलाञ्छनं च मलिनं,
नोन्मूलिता व्याधयः ।
शेषस्यापि धरां विधृत्य न कृतो भारावतारः क्षणं,
चेतः सत्पुरुषाभिमानगणनां मिथ्या वहँल्लज्जसे ॥

वृत्त — शार्दूल°

पाठान्तर — ४. वहँल्लज्जसे — वहन् खिद्यसे

१००

जातः कूर्मः स एकः पृथुभुवनभरायार्पितं येन पृष्ठं
श्लाघ्यं जन्म ध्रुवस्य भ्रमति नियमितं
यत्र तेजस्विचक्रम् ।
संजातव्यर्थपक्षाः परहितकरणे नोपरिष्टान्न चाधो
ब्रह्माण्डोदुंबरान्तर्मशकवदपरे प्राणिनो जातनष्टाः ॥

वृत्त — स्रग्धरा.

१०१

विरम विरसायासादस्माद्दुरध्यवसायतो
विपदि महतां धैर्यध्वंसं यदीक्षितुमीहसे।
अयि जडमते ! कल्पापाये व्यपेतनिजक्रमाः
कुलशिखरिणः क्षुद्रा नैते न वा जलराशयः॥

वृत्त — हरिणी.

१०२

प्रशान्तशास्त्रार्थविचारचापलं
निवृत्तनानारसकाव्यकौतुकम्।
निरस्तनिःशेषविकल्पविस्तरं
प्रपत्तुमन्विच्छति शंकरं मनः॥

वृत्त — वंशस्थ.

१०३

वितीर्णे सर्वस्वे तरुणकरुणापूर्णहृदयाः
स्मरन्तः संसारे विगुणपरिणामा विधिगतीः।
वयं पुण्यारण्ये परिणतशरच्चन्द्रकिरणां
त्रियामां नेष्यामो हरचरणचित्तैकशरणाः॥

वृत्त — शिखरिणी.

पाठान्तर — २. विगुणपरिणामा विधिगतीः — विरसपरिणामां विधिगतिम्।

१०४

किं वेदैः स्मृतिभिः पुराणपठनैः शास्त्रैर्महाविस्तरैः
स्वर्गग्रामकुटीनिवासफलदैः कर्मक्रियाविभ्रमैः ।
मुक्त्वैकं भवबन्धदुःखरचनाविध्वंसकालानलं
स्वात्मानन्दपदप्रवेशकलनं शेषा वणिग्वृत्तयः ॥

वृत्त — शार्दूल॰

१०५

चाण्डालः किमयं द्विजातिरथवा
शूद्रोऽथ किं तापसः
किं वा तत्त्वविवेकपेशलमतिर्
योगीश्वरः कोऽपि किम् ।
इत्युत्पन्नविकल्पजल्पमुखरैः संभाष्यमाना जनैः
न क्रुद्धाः पथि नैव तुष्टमनसो
यान्ति स्वयं योगिनः ॥

वृत्त — शार्दूल॰

१०६

यदासीदज्ञानं स्मरतिमिरसंस्कारजनितं
तदा दृष्टं नारीमयमिदमशेषं जगदपि ।
इदानीमस्माकं पटुतरविवेकांजनजुषां
समीभूता दृष्टिस्त्रिभुवनमपि ब्रह्म मनुते ॥

वृत्त — शिखरिणी.

पाठान्तर — २. जगदपि–जगदिति

१०७

भोगा भंगुरवृत्तयो बहुविधास्तैरेव चायं भवः
तत्कस्येह कृते परिभ्रमत रे लोकाः ! कृतं चेष्टितैः ।
आशापाशशतोपशान्तिविशदं चेतः समाधीयतां
कामोच्छित्तिवशे स्वधामनि यदि श्रद्धेयमस्मद्वचः ॥

वृत्त — शार्दूल°

१०८

मातर्मेदिनि, तात मारुत, सखे तेजः, सुबन्धो जल,
भ्रातर्व्योम, निबद्ध एव भवतामेष प्रणामाञ्जलिः ।
युष्मत्संगवशोपजातसुकृतोद्रेकस्फुरन्निर्मल-
ज्ञानापास्तसमस्तमोहमहिमा लीये परे ब्रह्मणि ॥

वृत्त — शार्दूल°

पाठान्तर — २. एव भवतामेष प्रणामाञ्जलिः —
एष भवतामन्त्यः प्रणामाञ्जलिः ।

## प्रकीर्णश्लोकाः

१०९

शय्या शैलशिला, गृहं गिरिगुहा,
वस्त्रं तरूणां त्वचः
सारङ्गाः सुहृदो, ननु क्षितिरुहां वृत्तिः फलैः कोमलैः
येषां नैर्झरमम्बुपानमुचितं, रत्यै च विद्याङ्गना,
मन्ये ते परमेश्वराः शिरसि यैर्बद्धो न सेवाञ्जलिः ॥

वृत्त — शार्दूल°

११०

न संसारोत्पन्नं चरितमनुपश्यामि कुशलं
विपाकः पुण्यानां जनयति भयं मे विमृशतः ।
महद्भिः पुण्यौघैश्चिरपरिगृहीताश्च विषया
महान्तो जायन्ते व्यसनमिव दातुं विषयिणाम् ॥

वृत्त — शिखरिणी.

१११

आदित्यस्य गतागतैरहरहः संक्षीयते जीवितं
व्यापारैर्बहुकार्यभारगुरुभिः कालो न विज्ञायते ।
दृष्ट्वा जन्मजराविपत्तिमरणं त्रासश्च नोत्पद्यते
पीत्वा मोहमयीं प्रमादमदिरामुन्मत्तभूतं जगत् ॥

वृत्त — शार्दूल°

११२

क्षणं बालो भूत्वा, क्षणमपि युवा कामरसिकः,
क्षणं वित्तैर्हीनः, क्षणमपि च संपूर्णविभवः ।
जराजीर्णैरङ्गैर्नट इव वलीमण्डिततनुः,
नरः संसारान्ते विशति यमधानीजवनिकाम् ॥

वृत्त — शिखरिणी.

११३

प्रियसख ! विपद्दण्डव्रातप्रपातपरम्परा-
परिचयचले चिन्ताचक्रे निधाय विधिः खलः ।
मृदमिव बलात्पिण्डीकृत्य प्रगल्भकुलालवत्
भ्रमयति मनो नो जानीमो किमत्र विधास्यति ॥

वृत्त — हरिणी.

११४

माने म्लायति, खण्डिते च वसुनि,
व्यर्थे प्रयातेऽर्थिनि,
क्षीणे बंधुजने, गते परिजने, नष्टे शनैर्यौवने ।
युक्तं केवलमेतदेव सुधियां यज्जह्नुकन्यापयः-
पूतग्रावगिरीन्द्रकन्दरतटीकुंजे निवासः क्वचित् ॥

वृत्त — शार्दूल°

पाठान्तर — ४. नटीकुंज — दरीकुंज

११५

अभिमतमहामानग्रंथिप्रभेदपटीयसी
गुरुतरगुणग्रामांभोजस्फुटोज्ज्वलचन्द्रिका ।
विपुलविलसल्लज्जावल्लीविदारकुठारिका
जठरपिठरी दुष्पूरेयं करोति विडंबनम् ॥

वृत्त — हरिणी.

११६

ज्ञानं सतां मानमदादिनाशनम्
केषांचिदेतन्मदमानकारणम् ।
स्थानं विविक्तं यमिनां विमुक्तये
कामातुराणामतिकामकारणम् ॥

वृत्त — वंशस्थ.

११७

सिंहो बली द्विरदशूकरमांसभोजी
संवत्सरेण रतिमेति किलैकवारम् ।
पारावतः खरशिलाकणमात्रभोजी
कामी भवत्यनुदिनं वद कोऽत्र हेतुः ॥

वृत्त — वसंततिलका.

११८

कृशः काणः खञ्जः श्रवणरहितः पुच्छविकलः
व्रणी पूयक्लिन्नः कृमिकुलशतरावृततनुः ।
क्षुधाक्षामो जीर्णः पिठरककपालार्पितगलः
शुनीमन्वेति श्वा हतमपि च हन्त्येव मदनः ॥

वृत्त — शिखरिणी.

११९

कान्ताकटाक्षविशिखा न लुनन्ति यस्य
चित्तं न निर्दहति कोपकृशानुतापः ।
कर्षन्ति भूरिविषयाश्च न लोभपाशैः
लोकत्रयं जयति कृत्स्नमिदं स धीरः ॥

वृत्त — वसंततिलका.

पाठान्तर — १. लुनन्ति यस्य — खनन्ति यस्य.

# सूक्तिसुधा

भर्तृहरिनां वचनो आपणा देशमां चलणी नाणानी पेठे वपराय छे. बधा ज प्रांतमां भर्तृहरिनो सरखो प्रचार होवाथी अने एनी विचारशैली बधे ज सरखी ग्राह्य होवाथी, एक रीते प्रजाकीय सांस्कृतिक एकता साधवामां आ वचनोनो फाळो मोटो अने कीमती नीवड्यो छे.

संस्कारी लोकोनां भाषणोमां अने लखाणोमां आ वचनो अवारनवार आववानां ज. राष्ट्रीय केळवणीमां आ वचनोने अवश्य स्थान होवुं जोईए. युवानो आ वचनो कंठस्थ करे ए जरूरनुं छे. केम के ए कहेवत पेठे वपराय छे अने एमांथी ज आपणी सभ्यता विकसी छे.

सुकविता यद्यस्ति, राज्येन किम् ?

*

व्रीडा चेत् किमु भूषणैः ?

*

पिशुनता यद्यस्ति, किं पातकैः ?

*

किं सर्पैर्यदि दुर्जनाः ?

*

क्षान्तिश्चेत् कवचेन किम् ?

*

शुचि मनो यद्यस्ति, तीर्थेन किम् ?

*

अपयशो यद्यस्ति, किं मृत्युना ?

*

ज्ञातिश्चेत् अनलेन किम् ?

*

सत्यं चेत्, तपसा च किम् ?

*

कल्पं स्थितं तनुभृतां तनुभिस्ततः किम् ?

*

ग्रस्तं न किं केन वा ?

*

संदीप्ते भवने तु कूपखननं प्रत्युद्यमः कीदृशः ?

*

निपुणता का ? धर्मतत्त्वे रतिः ।

*

का हानिः ? समयच्युतिः ।

*

राज्यं किं ? आज्ञाफलम् ।

*

कः शूरः ? विजितेन्द्रियः ।

*

सेवस्व विद्वज्जनम् ।

*

जहि मदम् ।

*

मान्यान्मानय ।

*

दुःखिते कुरु दयाम् ।

*

प्रच्छादय स्वान् गुणान् ।

*

विद्विषोऽप्यनुनय ।

*

पापे रतिं मा कृथाः ।

*

मोहं मार्जय ।

*

शान्तं भावमुपेहि ।

*

चेतः ! प्रसीदाधुना ।

*

विद्या परं दैवतम् ।

*

विद्या बन्धुजनो विदेशगमने ।

*

विभूषणं मौनमपण्डितानाम्

*

कवयो ह्यर्थं विनापीश्वराः ।

*

मूर्खस्य नास्त्यौषधम् ।

*

विद्याविहीनः पशुः ।

*

'प्रियं कृत्वा मौनं' पुरुषमभिजातं कथयति ।

*

नास्त्युद्यमसमो बंधुः ।

*

शीलं परं भूषणम् ।

*

ऐश्वर्यस्य विभूषणं सुजनता ।

*

शौर्यस्य वाक्संयमः (विभूषणम्) ।

*

न निश्चितार्थाद्विरमन्ति धीराः ।

*

न्याय्यात्पथः प्रविचलन्ति पदं न धीराः ।

*

यं यं पश्यसि तस्य तस्य पुरतो मा ब्रूहि दीनं वचः ।

*

विवेकभ्रष्टानां भवति विनिपातः शतमुखः ।

*

भोक्तुं न मोक्तुं क्षमाः ।

*

दौर्मन्त्र्यान्नृपतिर्विनश्यति ।

*

वचो हि सत्यं परमं विभूषणम् ।

*

न खलु वयस्तेजसो हेतुः ।

*

बलवान् कालः कृतान्तोऽक्षमी ।

*

कालाय तस्मै नमः ।

*

नहि शशक-विषाणं कोऽपि कस्मै ददाति ।

*

अनुद्धताः सत्पुरुषाः समृद्धिभिः ।

*

तन्मित्रमापदि सुखे च समक्रियं यत् ।

*

हृदि स्वच्छा वृत्तिः ।

*

विपत्सूच्चैः स्थेयम् ।

*

अविनयमनुमन्तुं नोत्सहे दुर्जनानाम् ।

*

सन्तः साश्चर्यचर्याः ।

*

संसारे रे मनुष्याः! वदत यदि सुखं
स्वल्पमप्यस्ति किंचित् ।

*

भोगे रोगभयम् ।

*

गुणे खलभयम् ।

*

वित्ते नृपालाद्भयम् ।

*

शास्त्रे वादभयम् ।

*

आघ्रातं मरणेन जन्म ।

*

अस्थैर्येण विभूतयोऽप्युपहताः ।

*

कथमहो मोहान्न लज्जामहे !

*

वैराग्यमेवाभयम् ।

*

तृष्णा न जीर्णा, वयमेव जीर्णाः ।

*

स तु भवतु दरिद्रो यस्य तृष्णा विशाला ।

*

वयमप्येकान्ततो निस्पृहाः ।

*

तल्पमस्वल्पमुर्वी ।

*

सन्तो वनान्तं गताः ।

*

मही रम्या शय्या ।

*

विपुलमुपधानं भुजलता ।

*

योगी सुखं तिष्ठति ।

*

आयुः कल्लोललोलम् ।

*

धर्म एको हि निश्चलः ।

*

बहुतृणं विश्वं मुहुः पश्यताम् ।

*

संत्यज निजां कल्लोललोलां गतिम् ।

*

लीये परे ब्रह्मणि ।

*

जीर्णमंगे सुभाषितम् ।

*

'सूक्तिसुधा' करतां जरा मोटां अने अर्थगंभीर एवां वचनोनी अहीं अंजली धरी छे. एनो हार बनावी कंठमां धारण करवाथी अनेक आपत्तिने वखत सदुपाय सूझे छे.

मनस्वी कार्यार्थी न गणयति दुःखं न च सुखम्।

*

संतः स्वयं परहितेषु कृताभियोगाः ।

*

सेवाधर्मः परमगहनो योगिनामप्यगम्यः ।

*

मन्ये ते परमेश्वराः शिरसि यैर्बद्धो न सेवांजलिः।

*

न जाने संसारः किममृतमयः किं विषमयः ।

*

प्रतीकारो व्याधेः सुखमिति विपर्यस्यति जनः ।

*

पीत्वा मोहमयीं प्रमादमदिरामुन्मत्तभूतं जगत् ।

*

नीचस्य गोचरगतैः सुखमास्यते कः ?

*

न हि गणयति क्षुद्रो जन्तुः परिग्रहफल्गुताम् ।

*

विवेकभ्रष्टानां भवति विनिपातः शतमुखः ।

*

नोलूकोऽप्यवलोकते यदि दिवा,
सूर्यस्य किं दूषणम् ?

*

कुत्स्याः स्युः कुपरीक्षकाः, न मणयो
यैरर्घतः पातिताः ।

*

पत्रं नैव यदा करीरविटपे, दोषो वसन्तस्य किम्?

*

लक्ष्मीर्यत्र, पतन्ति तत्र विवृतद्वारा इव व्यापदः ।

*

कालः काल्या भुवनफलके क्रीडति प्राणिसारैः ।

*

तत्किं नाम निरंकुशेन विधिना यन्निर्मितं सुस्थितम्?

*

को देहीति वदेत्स्वदग्धजठरस्यार्थे मनस्वी जनः?

*

सर्वः कृच्छ्रगतोऽपि वांछति जनः सत्त्वानुरूपं फलम् ।

*

किं जीर्णं तृणमत्ति मानमहतामग्रेसरः केसरी ?

*

होतारमपि जुह्वानं स्पृष्टो दहति पावकः ।

*

तत्को नाम गुणो भवेत्स गुणिनां यो दुर्जनैर्नांकितः?

*

अवस्था वस्तूनि प्रथयति च संकोचयति च ।

*

वाण्येका समलंकरोति पुरुषं या संस्कृता धार्यते।

*

तृणमिव लघुलक्ष्मीर्नैव तान् (पंडितान्) संरुणद्धि।
न भवति बिसतंतुर्वारणं वारणानाम् ॥

*

अहह ! महतां निःसीमानश्चरित्रविभूतयः ।

*

कल्पांतेष्वपि न प्रयाति निधनं विद्याख्यमन्तर्धनम्।

*

अधोमुखस्यापि तनूनपातः
नाधः शिखा याति कदाचिदेव ।

*

स्वार्थो यस्य परार्थ एव स पुमान्
एकः सतामग्रणीः ।

*

प्राप्येमां कर्मभूमिं न चरति मनुजो
यस्तपो मन्दभाग्यः ।

*

यद्यस्मासु पराङ्मुखोऽसि, वयमप्येकान्ततो
निस्पृहाः ।

*

सखे नान्यच्छ्रेयो जगति विदुषोऽन्यत्र तपसः।

*

सर्वं वस्तु भयान्वितं भुवि नृणां वैराग्यमेवाभयम् ।

*

वनं वा गेहं वा सदृशमुपशान्तैकमनसाम् ।

*

चेतःसद्मनि योगिनां विजयते ज्ञानप्रदीपो हरः ।

*

साहित्यसंगीतकलाविहीनः
साक्षात्पशुः पुच्छविषाणहीनः।

*

सतां प्रज्ञोन्मेषः पुनरयमसीमा विजयते ।

*

ज्ञानं सतां मानमदादिनाशनं
केषांचिदेतन्मदमानकारणम् ।

*

कलाशेषश्चन्द्रः, शरदि सरितः श्यानपुलिनाः ।
तनिम्ना शोभन्ते गलितविभवाश्चार्थिषु जनाः ॥

*

कूपे पश्य पयोनिधावपि घटो
गृह्णाति तुल्यं जलम् ।

*

तद्धीरो भव, वित्तवत्सु कृपणां वृत्तिं वृथा मा कृथाः॥

*

सर्वाशापरिपूरके जलधरे वर्षत्यपि प्रत्यहं ।
सूक्ष्मा एव पतन्ति चातकमुखे द्वित्राः पयोबिन्दवः॥

*

भोगः कोऽपि स एक एव परमो
नित्योदितो जृम्भते ।

*

यत्स्वादाद्विरसा भवन्ति विषयाः
त्रैलोक्य-राज्यादयः ॥

*

को वा वीचिषु बुद्बुदेषु च तडिल्लेखासु च
स्त्रीषु च ।
ज्वालाग्रेषु च पन्नगेषु च सरिद्वेगेषु च प्रत्ययः ॥

*

पुरा विद्वत्तासीदुपशमवतां क्लेशहतये ।
गता कालेनासौ विषयसुखसिद्ध्यै विषयिणाम् ॥

*

नृभिः प्राणत्राणप्रवणमतिभिः कैश्चिदधुना ।
नमद्भिः कः पुंसामयमतुलदर्पज्वरभरः ?

*

स तु भवतु दरिद्रो यस्य तृष्णा विशाला।
मनसि च परितुष्टे कोऽर्थवान् को दरिद्रः ॥

# टिप्पण

## नक्षत्रमाळा

### १

**विद्या** — विद्–जाणवुं.

**तपस्** — तपश्चर्या. एवुं कठण काम के जे करवाथी शक्तिओ वधे. शारीरिक, वाचिक, मानसिक, तथा आत्मिक शक्तिओ जे कर्म वडे वधे छे तेने तपस् कहे छे.

[ तपथी शक्तिओ वधे छे, ज्यारे भोगथी ते घटे छे. क्रोध के द्वेषथी पण तप क्षीण थाय छे. ]

अन्वय — मर्त्यलोके चरन्ति ।

### २

**साहित्य** — (१) विचारोना वाहन तरीके भाषानी केळवणीनुं शास्त्र. आने व्युत्पत्ति पण कहे छे. (२) भाषाना अभिजात ग्रंथराशिने पण साहित्य कहे छे. 'वाङ्मय,' अने 'सारस्वत' ए बे शब्दो आ ज अर्थना छे.

**कला** — मूंगो माणस पण जेमां फावी शके ते कला – एवी एक मजानी व्याख्या शुक्रनीतिमां आपेली छे.

**विषाण** — शींगडुं.

**भागधेयम्** — भाग्य, सद्भाग्य.

सरखावो : धर्मेण हीनाः पशुभिस्समानाः ।

३

**यं ( उद्यमं ) कृत्वा ( नरः ) न अवसीदति ।**

उद्योग करवाथी माणस पडतो नथी, तेनो नाश थतो नथी.

शत्रु बहारनो होय तो तेनाथी नासी जवाय, पण रोगनी पेठे शरीरमां ज बेठो होय तो तेनो समूळगो नाश न करीए तो ते आपणो सर्वनाश जरूर करवानो.

सरखावो : उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीः ।

४

मूळ श्लोकमां 'को न याति वशं लोके' एवो पाठ हतो. पण कवि तो नीच लोको विषे ज कहेवा मागे छे. शीलवान पुरुषो लांचने वश थता नथी. जे मृदंग ( माटीना अंगवाळा ) होय ते ज 'लोट' मळवाथी मीठुंमीठुं बोले छे.

**पिण्ड** — भातनो के लोटनो गोळो, खावानुं, लांच.

५

ज्यां प्रेम होय छे त्यां स्व-पर एवो भेद होतो नथी, त्यां 'मारुं तारुं' कोई करतुं नथी. स्वार्थ के मत्सर वच्चमां आव्यो के तरत ज जुदाई शरू थाय छे.

**अधुना** — अहुणा, हमणां.

६

**यः** ( वित्तं ) **न ददाति न वा भुंक्ते तस्य** (वित्तस्य) **तृतीया गतिः** ( नाशः ) **भवति** ।

लोभथी अने कंजूसाईथी धननो संग्रह करवाथी कशो लाभ नथी. सोमनाथना मंदिरनी संपत्ति जेम लूंटाई तेम तेनो नाश ज थवानो. सरखावो :

कृपणेन समो दाता भुवि कोऽपि न विद्यते ।
अस्पृशन्नेव वित्तानि यः परेभ्यः प्रयच्छति ॥

— व्यास

७

**परिचर्** — सेवा करवी.

**स्वैरकथाः** — सहेजमां बोलेलां वचनो.

पाठान्तर — २. ते न उपदेशम्–नो सदुपदेशम् ।

८

**अंबरखण्ड** —( १ ) वस्त्रनो ककडो, धोतियुं;
( २ ) आकाशनो भाग.

**संवीतः** — संव्ये–ढांकवुं, लपेटवुं, वींटाळवुं.

**चन्द्रमाः** — चन्द्रमस् नुं प्रथमा एकवचन.

**दौर्गत्यं** — कफोडी दशा, दुर्गति.

पौर्णिमानी रात्रे जे आकाशमां चंद्र फर्यो तेमां ज बीजे दिवसे सूरजने फरतो जोई, कविने थयुं के बे वच्चे एक ज धोतियुं छे. एके उतार्युं ते बीजो पहेरे छे !

९

**वृत्ति** — (१) गुजराननुं साधन, आजीविका;
(२) स्वभाव.

**लुब्धक** — शिकारी.

**धीवर** — माछी.

**पिशुन** — नीच, खल.

**विहित** — कृत, योग्य, निर्दोष.

**संतोषविहितवृत्तिः** — संतोषेण विहिता कृता वृत्तिः येन सः। यदृच्छालाभसंतुष्टः ।

सरखावो : अकारणाविष्कृतवैरदारुणाः ( खलाः ) ।

— बाण

१०

अफीणनो बंधाणी बिचारो अफीण शुं खाय ? अफीण ज तेने खाई जाय छे.

काळ अनन्त छे. आपणे काळ शुं वितावी शकवाना हता ? आपणे ज चाल्या जईए छीए.

**वयमेव जीर्णाः** — आपणे ज पची गया. भोग भोगववाथी तृष्णा ठंडी पडती नथी, आपणे ज ठंडा थईए छीए.

## ११

**परिवर्तिन्** — फरनार, चकडोळनी पेठे भमनार.

जातस्य हि ध्रुवो मृत्युः ध्रुवं जन्म मृतस्य च ।

— गीता

ते ज जन्मेलो कहेवाय के जेना जन्म्याथी एटले के पुरुषार्थ वडे वंशनी उन्नति थाय छे.

**वंश** — कुळ, खानदान, कोम, जाति.

## १२

**वरं** — मनाक् प्रियम् । वधारे सारुं, बहेतर.

**दुर्गम्** — दुःखेन गम्यते यत्र । कठण जग्या, पहाड, किल्लो वगेरे.

**भ्रान्तं** — भटकवुं, रखडपट्टी.

**वनचर** — जंगली पशुओ, जानवरो.

**वनेचर** — जंगलमां वसनारा भील वगेरे माणसो.

'मूर्ख'ने ठेकाणे 'नीच' अथवा 'दुष्ट' पण वापरी शकाय.

## १३

**स्तबक** — गुच्छो, गोटो.

**मनस्विन्** — तेजदार माणस; पराक्रमी, पुरुषार्थी, स्वाभिमान धरावनार.

सरखावो : नैसर्गिकी सुरभिणः कुसुमस्य सिद्धा
मूर्ध्नि स्थितिर्न चरणैरवताडनानि । — भवभूति.

पाठान्तरमां **मनास्विनम्**ने ठेकाणे **मनस्विनाम्** जोईए.

## १४

**लांगूल** — पूंछडुं.

**पिण्डदस्य** — खवडावनारनो ( आगळ)

**गजपुंगव** — श्रेष्ठ हाथी. पुंगव एटले बळद, पण अहीं 'श्रेष्ठ' एटलो ज अर्थ थाय छे.

**तु** — ज्यारे, बीजी बाजूए.

**चाटु** — खुशामतना शब्दो.

## १५

**प्रारब्धम्** — शरू करेलुं.

**प्रारभ्य चोत्तम॰** पाठमां खूबी छे. उत्तम लोको नीच लोको जेम डरे छे तेम न डरतां शरूआत करे छे अने प्रारंभ करीने ( प्रारभ्य ) मध्यम लोकोनी पेठे तेनो परित्याग पण करता नथी. सरखावो :

अनारम्भो हि कार्याणां प्रथमं बुद्धिलक्षणम् ।
प्रारब्धस्यान्तगमनं द्वितीयं बुद्धिलक्षणम् ॥

अने 'कर्म ज्यायो ह्यकर्मणः' ।

## १६

**महार्हाः** — महान् अर्हः ( मूल्यं ) येषां ते । मोंघा, कीमती.

**भीमविष** — भयंकर विष.

**भीतिं न भेजिरे** — बीक राखी नहि, सेवी नहि.

समुद्रमंथन वखते जे चौद रत्नो नीकळयां, तेमां हालाहल विष पण नीकळ्युं. छतां अमृत मळे नहीं त्यां सुधी देवदानवोए मंथन बंध राख्युं नहि.

कोई पण महान प्रयत्नने अंगे शरूआतथी ज अल्प लाभ अने महासंकटो आवे छे. अल्प फळोनो स्वीकार करवाथी तेटली तपस्या घटी जाय छे, अने महाफळ दूर दूर जाय छे.

## १७

**आज्ञा** — हकूमत, सत्ता.

**ब्राह्मणानाम्** — ब्राह्मणादीनां सर्ववर्णानाम् । धर्मपराणां विदुषां वा । आने ठेकाणे 'सज्जनानां' के 'दुर्बलानां' एवुं मूकशुं ?

सत्ता, कीर्ति वगेरे छ लाभ ( गुण ) जो न थाय तो राजानो आश्रय करवामां शो सार ?

**न प्रवृत्ताः** — प्राप्त थता नथी, सधाता नथी.

## १८

मोटा मोटा नागोना माथा पर एक मणि होय छे अने रात्रे तेनो प्रकाश चारे तरफ पडे छे, एवी एक मान्यता लोकोमां चालती आवेली छे. मणिमां अनेक सारा गुणो होय छे, पण सर्प तो भयंकर ज होय छे. दुष्ट माणस विद्वान के हुन्नरी होय तो ते वधारे भयंकर नीवडे छे.

## १९

**उत्पल** — कमळ. **उत्पलकोमलं** — कमळ जेवुं कोमळ.

**महा** (मोटा) **शैल** (पर्वत)नी **शिलाना संघात** (समूह) जेवुं **कर्कश** (कठोर, मजबूत, अडग).

विपदि धैर्यम् । अथ अभ्युदये क्षमा ।

वैभव होय त्यारे मोटा लोको बीजानां दुःख जोई कोमळ थाय छे. तेमनुं हृदय झट पीगळी जाय छे. पण ज्यारे तेमना उपर विपत्ति आवी पडे छे त्यारे तेओ पोताना प्रत्ये कठोर थाय छे; कष्ट वेठतां डगता नथी, शील छोडता नथी.

## २०

**नीति** — सदाचार, व्यवहारकुशळता, कुटिलता, दावपेच, एम विविध अर्थमां आ शब्द वपराय छे.

**नीतिनिपुणाः** — चतुर मुत्सद्दीओ.

**लक्ष्मीः** — संपत्ति, वैभव.

**धीर** — विचारवान, डाह्यो. धी (बुद्धि) चलावनार ते धीर.

'चार लोको कहे तेम चालवुं,' 'नुकसान न थाय एटलुं खास जोवुं,' 'पोताने बचावीने बने तो बीजानुं भलुं करवुं,' एम माननारा आजे घणा थया छे. तेथी ज आजनो जमानो हलको थयो छे. 'जे नेक देखाय

तेने ज वळगी रहेवुं, तेनी ज हिमायत करवी, अने तेम करतां जे आवी पडे ते खुशी साथे वधावी लेवुं,' ए लक्षण वीरयुगनुं छे.

## २१

**नम्राः** — (१) नीचे नमेला; (२) विवेकी, विनयशील.

**उद्गम** — ऊगवुं ते.

**घनाः** — वादळां.

**नवाम्बु** — नवुं पाणी.

**भूमिविलंबिनः** — जमीन तरफ नीचे झूकेला.

**अनुद्धता** — उद्धत नहिं एवा, नम्र.

झाडो पोतानां फळो बीजाने आपे छे; मेघ पोतानुं पाणी बीजा माटे वर्षे छे; सत्पुरुषो पण पोतानी संपत्ति परोपकारमां खर्चे छे; अने तेम करतां ते त्रणे गर्व करता नथी, नम्र रहे छे.

## २२

**श्रुत** — विद्या, शास्त्र, भणतर. वेदने श्रुति कहे छे.

**श्रोत्रिय** — विद्वान.

गुरुमुखथी सांभळीने विद्या ग्रहण करवामां आवती ते जमानामां आ शब्द तैयार थयो छे.

**पाणि** — हाथ.

दरेक वाक्यमां विभाति (शोभे छे) ए क्रियापद लेवुं जोईए.

## २३

सारो स्नेही शुं शुं करे छे ते आ श्लोकमां वर्णव्युं छे.

**मित्रम्** — स्नेही.

**गुह्यं** — गुप्त राखवा योग्य वात.

**काले** — संकट समये, अणीने वखते.

**न जहाति** — छोडतो नथी.

## २४

**उपचीयते** — वधे छे.

**विमृशन्तः** — विचार करवावाळा.

**विपदा** — विपत्तिथी.

मूंझाता नथी केमके विपत्ति टकवानी नथी.

## २५

**कन्दुकः** — दडो.

**कराघातैः** — कर एटले हाथ, एना आघातोथी.

**पातितः** — पाडेलो.

**उत्पतति एव** — जरूर ऊछळे छे.

**वृत्त** — (१) शील, चारित्र्य; (२) गोळ.

**साधुवृत्त** — (१) सज्जन; (२) गोळ दडो.

**स्थायिन्** — कायम टकनार.

**अस्थायिन्** — न टकनार.

२६

आर्य (श्रेष्ठ) पुरुष पडे तो पण दडाना पडवा प्रमाणे पडे छे. एटले के तरत पाछो ऊछळे छे.

अनार्य (पामर) माणस तो जेम माटीनुं ढेफुं पडे तेम पडे छे.

२७

**कदर्थित** — पजवायेलो, दुःखित.

**प्रमार्ष्टुम्** — प्रमृज् – भूंसी नाखवुं.

**तनूनपात्** — अग्नि, देवता.

**शिखा** — ज्वाळा.

मशाल नीचे करीए तो पण ज्वाळा तो उपर ज जवानी.

# टिप्पण

## सद्बोधशतकम्

### मंगलाचरण

**दिक्कालाद्यनवच्छिन्न** — दिशा, काळ इत्यादिथी अमर्यादित; स्थळकाळ वगेरेथी पर.

**चिन्मात्रमूर्ति** — चिन्मात्रं मूर्तिः यस्य । केवळ (शुद्ध) ज्ञान ए ज जेनुं स्वरूप छे ते.

सत्यं ज्ञानमनन्तं ब्रह्म । — तैत्तिरीयोपनिषद्

**स्वानुभूत्येकमानाय** — स्वानुभूतिः एव एकं मानं प्रमाणं ज्ञानसाधनं यस्य सः तस्मै । स्वानुभूति आत्मसाक्षात्कार ए ज जेने जाणवानुं एक साधन छे तेने.

१

**प्रच्छन्न** — गुप्त, गूढ.

**गुप्त** – रक्षाएलुं, सुरक्षित

संस्कृत साहित्यमां विद्यानी प्रशस्ति अनेक रीते थयेली छे:

विद्याधनं सर्वधनप्रधानम् ।

सा विद्या या विमुक्तये ।

**विद्याविहीनः पशुः** — सरखावोः

साहित्यसंगीतकलाविहीनः साक्षात् पशुः पुच्छविषाणहीनः ।

**आ श्लोकमां घणा रूपको होवाथी अलंकार मालारूपक थाय छे.**

२

**मूर्धजाः** — मूर्ध्नि जाताः मूर्धजाः । माथाना वाळ. (मूर्धन्–माथुं; जन्–जन्मवुं, पेदा थवुं.)

**संस्कृता** (वाणी) — शास्त्रसंस्कारयुक्ता ग्राम्यत्वादि दोषरहिता च । गीतामां तेनुं वर्णन आम कर्युं छे :

अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत् ।

**वाग्भूषणं भूषणं** – सरखावो

कामान्दुग्धे विप्रकर्षत्यलक्ष्मीं कीर्तिं सूते दुष्कृतं या हिनस्ति ।
तां चाप्येतां मातरं मङ्गलानां धेनुं धीराः सूनृतां वाचमाहुः ॥

— भवभूति

तेम ज

संस्कारवत्येव गिरा मनीषी तया स पूतश्च विभूषितश्च ।

कुमारसंभव १–२८

३

**प्ताङ्कुशाः** — दानशीलाः, चातकाधाराः (श्लोक १५ जुओ)

सरखावो:

याञ्चा मोघा वरमधिगुणे नाधमे लब्धकामा ।

मेघदूत

तेम ज

साधुरेवार्थिभिर्याच्यः क्षीणसत्त्वोऽपि सर्वदा ।
शुष्कोऽपि हि नदी मार्गः खन्यते सलिलार्थिभिः ॥

४

**स्मयदूषिताः** — गर्वथी दूषित.

**अबोधोपहताः** — अज्ञानग्रस्ताः

**जीर्णमङ्गे सुभाषितम्** — विद्या अने वचनचातुरी कोना आगळ व्यक्त करवी ? ते अंदर ने अंदर सुकाई गई छे.

अदेखाई, अहंकार अने अज्ञान के जडता ए त्रणे काव्य, साहित्य तेम ज कळानी साची कदर करवामां अन्तरायो छे.

५

**चलाचल** — अतिशय चंचळ. अतिशयता बतावया माटे 'चल'ने अहीं बेवडयुं छे. अने तेथी पहेला चलना अन्त्य अ नो आ थयो छे. चल+अचल एम पण रूप बनी शके छे अने त्यां अचलनो अतिचल एवो अर्थ थाय छे. नास्ति चलं यस्मात् तत् । सरखावो :

लक्ष्मीस्तोयतरङ्गभङ्गचपला विद्युच्चलं जीवितम् ।

६

**दुकूलं** — नाजुक रेसानुं कपडुं; रेशमी कपडुं.

**निर्विशेषः** आधिक्यरहितः भेदरहितः **विशेषः** । महत्त्व वगरनो फेर, अन्तर

सरखावो : सर्वाः संपत्तयस्तस्य संतुष्टं यस्य मानसम् ।

उपानद्गूढपादस्य ननु चर्मावृतैव भूः ॥

— हितोपदेश

तथा संतोष एव पुरुषस्य परं निधानम् ।

७

**अज्ञः** — जानाति इति ज्ञः; न ज्ञः अज्ञः ।

**दुर्विदग्ध** — कुसंस्कारी, अर्धदग्ध, दुर्विनीत. विदग्ध-सारी रीते बाळेलुं, परिपक्व, शुद्ध, संस्कार पामेलो, भणेलो.

सरखावो :

A little knowledge is a dangerous thing;
Drink deep or taste not the Castalian spring.
— Pope

८

**द्विपः** — द्वाभ्यां (शुंडया मुखेन च) पिबति इति द्विपः । हाथी.

सरखावो: अल्पविद्यो महागर्वी ।

अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पंडितंमन्यमानाः ।
—कठोपनिषद

९

**जुह्वान** — आहुति आपतो – आपनार – माणस.

**पावकः** — अग्नि. पुनाति इति पावकः ।
दोषोने बाळीने पवित्र करनार.

सरखावो : हसन्नपि नृपो हन्ति ।

तेम ज राजसेवा मनुष्याणां असिधारावहेलनम् ।
पञ्चाननपरिष्वङ्गो व्यालीवदनचुंबनम् ॥
— कुवलयानन्द

## १०

**लोभः** — प्राप्तेऽप्यर्थे अधिकप्राप्तीच्छा ।
लोभ बधां पापोनुं मूळ गणाय छे. लोभः पापस्य कारणम् ।

लोभः स्वल्पोऽपि तान् हन्ति श्वित्रं रूपमिवेप्सितम् ।

तान् — अखिलान् गुणान् । श्वित्र – कोढ.

**पिशुनता** — पाछळथी दोष काढवानी के चाडी खावानी टेव.

**तीर्थम्** — तीर्यते यत्र तत्तीर्थम् । घाट, पार ऊतरवानो मार्ग, आरो, पवित्र स्थान.

**निजाः** — पोतीकाओ, सगांवहालांओ.

**अपयशो** — सरखावो :

संभावितस्य चाकीर्तिः मरणादतिरिच्यते । — गीता

## ११

**जहि** — मारी नाख. हन्-मारवुं.

**पदवी** – मार्ग

## १२

**दुग्धजलभेदविधौ वैदग्ध्यम्** — दूध ने पाणी जुदां पाडवानी हंसनी कळा संस्कृत साहित्यमां बहु गवाई छे. सरखावो : नीरक्षीरविवेके हंसालस्यं त्वमेव कुरुषे चेत् ।

विश्वेऽस्मिन्नधुनान्यः कुलव्रतं पालयिष्यति कः ॥

— भामिनीविलास

१३

**विद्यमान** — हस्ती धरावती वस्तु

**शशकविषाण** अथवा **शशशृङ्ग, वन्ध्यासुत, खपुष्प** इ. शब्दो असंभवित वस्तु माटे वपराय छे.

बोलवा उपरथी माणसनी लायकात जणाई आवे छे.

न नीचजातस्य ललाटशृङ्गम्, कुलप्रसूतस्य न पाणिपद्मम् ।
यथा यथा मुञ्चति वाक्यबाणं तथा तथा जातिकुलप्रमाणम् ॥

१४

**दुधुक्षसि** — तुं दोहवाने इच्छे छे. 'दुह्–दोहवुं'नु आ इच्छादर्शक रूप छे.

**अनिशम्** — हंमेश

अति संक्षेपने कारणे आ श्लोकमां बे उपमाओनुं मिश्रण ( संकर ) थयुं छे. सरखावो :

दुदोह गां स यज्ञाय सस्याय मघवा दिवम् ।

— रघुवंश

१५

**गोचर** — ज्ञात, प्रत्यक्ष. गो (इन्द्रिय)+चर ।

**अम्भोदवर** — मेघश्रेष्ठ ( अम्भस् + द + वर )

**कार्पण्योक्ति** — दीन वचन

चातक पक्षी विषे संस्कृत कविओनो संकेत छे के, ते आकाशमांथी पडतुं पाणी ज पीए छे अने बाकीनो वखत ते पडवानी राह जुए छे. ते उपरथी उत्कट प्रतीक्षा

माटे, चातकनी जेम राह जोवी एवी कहेवत थई पडी छे.
सरखावो : धरणीपतितं तोयं चातकानां रुजाकरम् ।

याचना करवानो प्रसंग आवतां स्वमान धरावनार माणसने केटली मनोवेदना थाय छे ते नीचेना श्लोकथी स्पष्ट थशे.

देहीति वक्तुकामस्य यद् दुःखमुपजायते ।
दाता चेत्तद्विजानीयात् दद्यात्स्वपिशितान्यपि ॥

— प्रसंगावलि

१६

**अयस्** — लोढुं, तांबुं

**स्वात्याम्** — स्वाति नक्षत्रमां सूर्य होय त्यारे समुद्रमांनी छीपो ऊघडे छे अने तेमां वरसादनां टीपां पडतां तेनां मोती थाय छे, एवी मान्यता छे.

पात्रविशेषे न्यस्तं गुणान्तरं व्रजति शिल्पमाधातुः ।
जलमिव समुद्रशुक्तौ मुक्ताफलतां पयोदस्य ॥

वराहमिहिर १८-१३

सोबत तेवी असर.

१७

**ते** — तेओ, जाणीता, लोकप्रसिद्ध.

**कृशानु** — अग्नि

कुदरती घटना उपरथी नैतिक तत्त्व घटाववुं अथवा तेनी उपर भावारोपण करवुं, ए आंग्ल कविओनी एक खासियत मनाय छे. पण ते भर्तृहरि जेवा प्राचीन कविमां पण बहु सुन्दर रूपमां मळी आवे छे.

**मित्रापदं°** — आपत्ति ज मित्रतानी साची कसोटी छे.

निकषग्रावा तु तेषां ( मित्राणां ) विपत् । —हितोपदेश

१८

एक दरिद्री माणसे स्मशानमां पडेला शबने पोताना दारिद्र्यभार साथे थोडा वखत माटे सादु करवा वीनव्युं. पण शबे विचार कर्यो के आ तो खोटनो वेपार छे तेथी एणे तेने जवाब न आपवानुं ज उचित मान्युं.

सरखावो : दारिद्र्यान्मरणाद् वा मरणं मे रोचते न दारिद्र्यम् ।
अल्पक्लेशं मरणं दारिद्र्यमनन्तकं दुःखम् ॥
— मृच्छकटिक मां 'चारुदत्त

१९

**मदः** — हाथीना गंडस्थळमांथी झरतो मद, दान.

**सत्त्ववत्** — तेजस्वी, बळवान

सरखावो : तेजसां हि न वयः समीक्ष्यते । — कालिदास

२०

**पाद** — पग, किरण

**इनकान्तः** — सूर्यकान्तमणि

**निकृति** — अपमान

**यद्...तद्** — जो...तो पछी.

धूळने विषे पण एक कविए आम ज कह्युं छे:

पादाहतं यदुत्थाय मूर्धानमधिरोहति ।
स्वस्थादेवापमानेऽपि देहिनस्तद्वरं रजः ॥

२१

**अव[illegible]र** — कचरानो ढगलो, उकरडो

**कृकवाकु** — कूकडो ( कृकेण गलेन वक्ति इति । )

सरखावो : वनेऽपि सिंहा मृगमांसभक्षिणो
बुभुक्षिता नैव तृणं चरन्ति ।
एवं कुलीना व्यसनाभिभूता
न नीचकर्माणि समाचरन्ति ॥

२२

सरखावो :

इक्षोरग्रात्क्रमशः पर्वणि पर्वणि यथा रसविशेषः ।
तद्वत् सज्जनमैत्री विपरीतानां च विपरीता ॥

— शार्ङ्गधरपद्धति

वे दुर्जनो जो पासे आवे तो वखत जतां तेमनो संबंध वधारे ने वधारे बगडतो जाय छे, ज्यारे सज्जनोनो संबंध वधारे ने वधारे स्निग्ध थतो जाय छे.

२३

**धैर्यम्** दृढचित्तत्वम् ।
मनसो निर्विकारत्वं **धैर्यम्** सत्स्वपि हेतुषु ।
**युधि विक्रमः** — युद्धे चाप्यपलायनम् । —गीता
**अभिरतिः** — प्रीति, संग्रहेच्छा

२४

**अकारणविग्रहः** — कारण विना लडवाड.

सरखावो : अकारणाविष्कृतवैरदारुणादसज्जनात्कस्य भयं न विद्यते । — बाण

**योषित्** — स्त्री

**असहिष्णुता** — ( तेमनो उत्कर्ष ) सहन न थवो ते, अदेखाई

२५

**प्रणयिता** — भक्ति, निष्ठा ( प्रणय–प्रेम, भक्ति )

**प्रकृतिमहताम्** – प्रकृत्या महताम्। स्वभावे मोटाओना।

**करे श्लाध्यः त्यागः** –

दानेन पाणिः (विभाति) न तु कंकणेन ।

**मुखे सत्या वाणी** – किं वाचां मण्डनम् ? सत्यम् । —शंकर

**श्रुतमधिगतं च श्रवणयोः** –

श्रोत्रं श्रुतेन एव (विभाति) न कुंडलेन ।

२६

**पद्म** - सूर्यथी विकसतुं कमळ

**कैरव** – चन्द्रथी विकसतुं कमळ, कुमुद

**विकचीकरोति** — विकसित करे छे, खीलवे छे. विकच – विगतः कचः यस्मात् । प्रफुल्ल, स्फुट. ( कच–घडी )

**नाभ्यर्थितोऽपि** नो संबन्ध दिनकर, चन्द्र तथा जलधर त्रणे साथे लेवानो छे.

**कृताभियोगाः** — कृतः अभियोगः उत्साहपूर्वकः यत्नः यैस्ते । कृतोद्योगाः।

स्वभाव एवोन्नतचेतसां सतां परोपकारव्यसनं हि जीवितम् ।

२७

**शाल्योदन:**— शालि नामना चोखानो- कमोदनो-भात

**मनस्वी** — प्रशस्तं मन: अस्य अस्तीति । उदार – उन्नत – मनवाळो

**कार्यार्थी** — कार्यं अर्थयते इति । काम करवा मागनार ( विद्यार्थी, धनार्थी इ. नी जेम)

सरखावो : सुखदु:खे समे कृत्वा लाभालाभौ जयाजयौ ।

तेम ज क्रियासिद्धि: सत्त्वे भवति महतां नोपकरणे ।

२८

**अभिमुखनिहत** — सामी छातीए घवायेलो

**साधुवाद:** — ' साधु साधु ' इति वाद: उक्ति: । 'शाबाश,' ' शाबाश 'ना पोकारो, जयजयकार

**तिष्ठतु तावत्** — सरखावो :

हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम् ।

— गीता

२९

**अवधार्या** — विचारवी घटे छे.

**आविपत्ते:** — मरण पर्यंत

**विपाक:** — ( पच्-रांधवुं ) राधवुं ते; पक्वता, फळ, परिणाम

**अतिरभसकृत** — अति उतावळथी करेलुं, वगर वचार्ये करेलुं

सरखावो : सहसा विदधीत न क्रियां, अविवेकः परमापदां पदम् ।
— भारवि

३०

**दिशति** — उपदेशे छे, बतावे छे, आपे छे.

**अपाकरोति** — ( अप+आ+करोति ) दूर करे छे. संस्कृतमां उपसर्गोनी मददथी अनेक अर्थभेद सहेलाईथी उपजावी अने बतावी शकाय छे.

**सत्संगतिः°** — सरखावो :

संगः सतां किमु न मङ्गलमातनोति । — जगन्नाथ पण्डित
सतां हि संगः सकलं प्रसूते । — सभातरङ्ग
सतां सद्भिः संगः कथमपि हि पुण्येन भवति ।
— भवभूति

३१

**ऐश्वर्यम्** — ईश्वरस्य भावः । स्वामित्व, वैभव

**उपशमः** — शान्ति, इन्द्रियनिग्रह, इन्द्रियजय

**वित्तस्य°** — सात्त्विक दाननुं आ लक्षण ज छे.

देशे काले च पात्रे च तद्दानं सात्त्विकं विदुः । — गीता

**प्रभवितुः** — निग्रहानुग्रहसमर्थस्य । प्रभुता धरावनारनुं

सरखावो :

ज्ञाने मौनं, क्षमा शक्तौ, त्यागे श्लाघाविपर्ययः ।
गुणा गुणानुबन्धित्वात् तस्य ( दिलीपस्य ) सप्रसवा इव ॥
— रघुवंश

**शीलं°** — सरखावोः कोऽलंकारः? शीलम् । — शंकर

३२

**जलायते** — जलमिव आचरति । जलवच्छीतलो भवति । आ अने बीज नामधातुओ छे, अने ते अय् प्रत्यय लगाडवाथी बने छे.

**कुल्या** — खाबोचियुं.

**माल्यगुण** — हारनो दोरो

**समुन्मीलति** — विकसे छे, प्रकाशे छे

सरखावो : अहौ वा हारे वा.........श्लोक ८९

३३

**परितर्जयन्ती** — धमकावती, बीक बतावती.

तर्ज् (बीक बतावती) उपरथी बनेलो तर्जनी शब्द अंगूठा पासेनी आंगळी माटे वपराय छे, कारण धमकावतां तेनो उपयोग थाय छे.

**भिन्नघटात् इव अम्भः** — फूटेला घडामांथी जेम पाणी

**चित्रम्** — विचित्र, आश्चर्यकारक

**अहितम्** — स्वविनाशहेतुभूतं कर्म । परापकारम्

३४

**मानस** — हे मन. कवि मनने उद्देशीने प्रश्न करे छे.

**आत्मनीनं** — आत्मने हितम् । आत्माने माटे हितकर.

**आत्मलीनं** — आत्मनि अन्तःकरणे लीनं गूढं स्थितं, न तु दूरस्थम् ।

**भ्रान्त्यापि** — भूलथी पण, क्यारेक पण

**निर्वृतिः** — शांति, मोक्षसुख, परमानन्द

सरखावो : तमात्मस्थं येऽनुपश्यन्ति धीराः

तेषां सुखं शाश्वतं नेतरेषाम् । — कठोपनिषद्

३५

**अकिंचन** — नास्ति किंचन यस्य सः । जेनी पासे कशुं नथी एवो, गरीब, पूरेपूरो अपरिग्रही

**दान्त** — इन्द्रियनिग्रहवान् ।

निग्रहो बाह्यवृत्तीनां दम इत्यभिधीयते ।

**शान्त** — यतचित्त, जेणे पोतानुं चित्त काबूमां राख्युं छे ते.

**सुखमय** — आनंददायी, सुखपूर्ण

सरखावो : संतोषामृततृप्तानां यत्सुखं शान्तचेतसाम् ।

कुतस्तद्धनलुब्धानां इतश्चेतश्च धावताम् ॥

— हितोपदेश

३६

**चाटुल** — खुशामतखोर

**धृष्ट** — अविनीत, निर्लज्ज, धीट.

**अप्रगल्भ** — बीकण, असंस्कारी, गामडियो.

**अभिजात** — संस्कारी, कुलीन, खानदान

**गहनः** — दुःखेनापि अवगन्तुं अशक्यः ।

सरखावो : वरं वनं वरं वह्निः वरं भारोपजीवनम् ।

पुंसां विवेकहीनानां सेवया न धनार्जनम् ॥

—सभातरङ्ग

भारोपजीवनम् — हमाली के वैतरुं करीने जीववुं ते.

३७

**असुभंग** — मरण. असवः-प्राणाः । आ शब्द बहु-वचनमां ज वपराय छे.

**पदमनुविधेयं च महताम्** — अनुयाहि साधु-पदवीम् । जुओ श्लोक ११

**असिधाराव्रत** — खांडानी धार उपर चालवा के सूवा जेवुं अघरुं व्रत, अति विकट कर्म.

सरखावो : क्षुरस्य धारा निशिता दुरत्यया ।

दुर्गं पथस्तत्कवयो वदन्ति ॥ —कठोपनिषद

३८

**मध्येपृष्ठम्** — पृष्ठस्य मध्ये इति मध्येपृष्ठम्-अव्ययीभाव समास. जेमके मध्येमहाभारतम् मध्येगङ्गम् इ.

**कमठपति** — कूर्मावतारी विष्णु

**सः** एटले **शेषः**

**क्रोडाधीनं कुरुते** — खोळामां ले छे.

३९

**प्रदानं प्रच्छन्नम्** — दान आपे ते तेनी कोई पण जातनी जाहेरात कर्या विना.

**संभ्रमविधि**—प्रत्युत्थानाभिवादनादिना आदरविधिना औत्सुक्यम् । ऊठीने उतावळथी सामा जई स्वागत करवुं ते. **संभ्रम** — आदर, उतावळ.

**निरभिभवसार** — निन्दारहित

**अनुत्सेकः** — निरभिमानता

सरखावो : श्लोक ३७

४०

**क्षुत्क्षामः** — क्षुधा क्षामः । भूखथी क्षीण थयेलो.

**विपन्नदीधितिः** — विपन्ना नष्टा दीधितिः दीप्तिः यस्य सः । नष्टतेज, तेजोहीन.

**इभ** — हाथी

**केसरी** — केसरः ( याळ ) अस्य अस्ति इति । सरखावो : यदि नाम दैवगत्या...( श्लोक २१मो )

४१

**वाडव** — वडवानल. समुद्रमां रहीने तेने शोषतो काल्पनिक अग्नि

**संभृत** — एकठी करेली

**जीमूतः** — जीवनस्य मूतः पटबन्धः-मेघ

सरखावो : यस्मिन् जीवति जीवन्ति बहवः सोऽत्र जीवति ।
वायसाः किं न कुर्वन्ति चञ्च्वा स्वोदरपूरणम् ॥
—पंचतंत्र

तथा प्रजानामेव भूत्यर्थं स ( दिलीपः ) ताभ्यो बलिमग्रहीत् ।
सहस्रगुणमुत्स्रष्टुं आदत्ते हि रसं रविः ॥ — रघुवंश

४२

**मनसि वचसि°** — मनोवाक्कायैः पुण्यकर्माचरणे रताः । मन, वाणी अने कर्मथी पुण्यकर्म आचरनारा.

**श्रेणि** — हार, परंपरा.

**पर्वतीकृत्य** — पर्वत जेवुं करीने. आने 'च्वि' रूप कहे छे. अभूततद्भावे च्विः । पुत्रीकृतः धवलीकरोति इ.

४३

**वितत** — विस्तृत, श्रमपूर्वक करेलुं

**पृथु** — मोटुं, पहोळुं

**मुखर** — खूब बोलनार

**दुर्मुख** — जेनुं मोढुं पण न जोवाय एवो, दुष्ट

**साश्चर्यचर्या:** — आश्चर्यकारक आचरणवाळा

**क्षान्त्यवा ... दूषयन्त:** — आक्षेप के निंदाना कठोर शब्दोथी जेमनां मुख वाचाळ बन्यां छे एवा दुष्ट लोकोनी पिशुनताने पोताना क्षमाशील आचरणथी ज उघाडी पाडी तेमने जाणे टपको आपता, उतारी पाडता, तेमनुं हीनत्व स्पष्ट करता.

सरखावो:

अक्कोधेन जिने कोधं असाधुं साधुना जिने।

जिने कदरियं दानेन सच्चेनालीकवादिनम् ॥ —धम्मपद

तथा स्वार्थो यस्य परार्थ एव स पुमान् एक: सतामग्रणी: ।

श्लोक ४१

४४

**लज्जा** — दुष्कर्मनिवारणहेतुभूत: गुणविशेष: । व्रीडा इति यावत् ।

**अनुवर्तमानाम्** — सदाय पाछळ पाछळ आवती; रक्षण करती

**सुखम्** — सुखेथी

सरखावो:

परित्यजेयं त्रैलोक्यं राज्यं देवेषु वा पुनः ।
न त्वहं सत्यमुत्स्रष्टुं व्यवसेयं कथंचन ॥

महाभारते भीष्माचार्यः ।

४५

**कूर्मः** — कौ जले ऊर्मिः वेगः अस्य इति । जेनी पाणीमां गति छे ते – काचबो

**निर्वाहः** — चीवटपूर्वक नभाववुं, पार पाडवुं ते

**प्रतिपन्नवस्तुषु** — हाथमां लीधेली वस्तु, अंगीकृत कार्य.

**गोत्रव्रतम्** — कुलव्रत, कुलधर्म

सरखावो:

अद्यापि नोज्झति हरः किल कालकूटं
कूर्मो बिभर्ति धरणीं खलु पृष्ठभागे ।
अम्भोनिधिर्वहति दुःसहवाडवाग्निं
अङ्गीकृतं सुकृतिनः परिपालयन्ति ॥

रघुकुलरीति सदा चलि आई । प्राण जाहु बरु बचनु न जाई ।

— तुलसीदास

४६

**तदीयद्विषाम्** — तेना (केशवना) शत्रुओनुं-राक्षसोनुं

**कुलं** — रहेठाण, समूह

**शिखरिन्** — शिखरवाळो – पर्वत

**संवर्तकाः**— प्रलयकालवर्षिणः मेघविशेषाः प्रलयाम्रयः वा ।

**ऊर्जितम्** — अति बळवान, प्रभावशाळी

**भरसह** — भार सहन करे तेवुं

४७

**उदन्वच्छन्ना** — समुद्रथी ढंकायेली–मर्यादित थयेली.

**उदन्वत्** — उदकानि सन्ति अत्र इति । सागर.

**कलयति** — मापे छे. कल् क्रियापदना संस्कृतमां अनेक अर्थ थाय छे अने तेथी आ धातु कामधेनु कहेवाय छे. कलतिः कामधेनुः इति वैय्याकरणोक्तिः।

**स्फुरदवधिमुद्रामुकुलिताः** — लसत्परिच्छेद एव मुद्रा ('सील')तया मुकुलिताः पिहिताः परिच्छिन्ना इत्यर्थ : । स्पष्ट देखाती मर्यादानी छाप ( मुद्रा–' सील ')थी ढंकायेली, परिच्छिन्न

**भावाः** ( स्थावरजंगमाः ) — ( स्थावर जंगम ) बधी वस्तुओ

**प्रज्ञोन्मेषः** — बुद्धिनो उन्मेष—विकास ( खीलवुं ते ) सरखावो :

इति परिमितिमन्तो भान्ति सर्वेऽपि भावाः
स तु निरवधिरेकः सज्जनानां विवेकः ॥

४८

**परार्थघटकाः** — पारकानुं हित साधनार

४९

**स्थाली** — स्थलति तिष्ठति अन्नमत्र इति । थाळी, तपेली

**वैडूर्य** — पोखराज.

**तिलखली** — तलनो खोळ

**लांगल** — हळ.

**अर्कमूल** — आंकडानुं मूळियुं

**वृति** — वाड

**कोद्रव** — कोदरो, एक हलकुं रुक्ष धान्य

**कर्मभूमि** — सत्कर्म करवा योग्य भूमि, मर्त्यलोक. 'भोगभूमि' अथवा 'फलभूमि' स्वर्ग माटे वपराय छे.

कर्मभूमिरियं ब्रह्मन् ! फलभूमिरसौ मता । — महाभारत

५०

**हेमगिरि** — सोनानो पर्वत, मेरु पर्वत. आ पर्वत पृथ्वीना मध्यमां आवेलो छे अने तेनी आसपास आखुं विश्व फरे छे. एवी पौराणिक मान्यता छे.

**रजताद्रि** — चांदीनो पर्वत, कैलास पर्वत. बरफथी ढंकायेलो होवाथी सूर्यप्रकाशमां चांदीना पतराथी मढेलो होय एवो देखाय छे.

**तरवस्तरवः ते एव** — ते वृक्षो (बदलाया विना) जेवां होय तेवां वृक्षो ज रहे छे.

**मन्यामहे** — मोटो गणीए छीए; मान आपीए छीए.

**मलयः** — हिन्दुस्तानना दक्षिणमां आवेलो पर्वत. तेना उपर चन्दननां झाड बहु थाय छे. ते उपरथी 'मलयज 'नो अर्थ चन्दन थाय छे.

सरखावो :

मलयाचलगन्धेन त्विन्धनं चन्दनायते ।
तथा सज्जनसंगेन दुर्जनः सज्जनायते ॥

५१

**मघवन्** — इन्द्र. मह्यते पूज्यते इति मघवन् – मघवा ।

**कुलिश** — वज्र.

**दहनोद्गारगुरुभिः** — अग्निनी ज्वाळाओथी दुःसह.

**उद्गार** — बहार आववुं ते, ज्वाळा

**गुरु** — भारे, दुःसह.

**तुषाराद्रेः सूनुः** — हिमालय पर्वतनो पुत्र, मैनाक पर्वत.

**असौ संपातः** — ते ( पुराणोमां प्रसिद्ध एवुं ) पतन.

पहेलां पर्वतोने पांखो हती. ते बधेय ऊडता अने प्राणीओने भारे त्रास आपता. एमनी सामे दाद मागवा मुनिओनुं शिष्ट मंडळ ( deputation ) इन्द्र पासे गयुं. प्राणीमात्रने आ ऊडता पहाडोना त्रासमांथी मुक्त करवा इन्द्रे पोताना वज्रथी पर्वतोनी पांखो कापी नाखी. ते वखते हिमालयनो पुत्र मैनाक पोतानो जीव बचाववा वायुनी मददथी समुद्रमां कूदी पडी संताई गयो. ए पौराणिक कथानो अहीं उल्लेख छे.

५२

**भिन्न** — नष्ट थयुं, नाश पाम्युं

**मुदः** ( मुद् नुं बहुवचन) आनंद, संतोष, मनःस्वास्थ्य

**इत्थम्** — आम, आवी स्थितिमां

**तादृक्** — तेवो, अमर्याद

**स्वात्मन्येव...महिमा°** — जेना सोनानुं महत्त्व पोतानी अंदर ज समाप्त थयुं छे तेवो, जेना सोनानो बीजा कोईने लाभ नथी एवो.

**अभिन्ना मृदः** — माटीथी जुदो नथी एवो, माटी समान

५३

**कृमिकुलचित** — जीवडाओनी आबादीथी भराई गयेलुं — खदखदतुं

**जुगुप्सा** — घृणा. गुप् ( रक्षण करवुं )नुं इच्छादर्शक रूप छे, पण ते आ ज खास अर्थमां वपराय छे

**न शंकते** — शरमातो नथी

**फल्गुता** — तुच्छता, असारता

सरखावो : त्यक्तलज्जो राज्यभाग् इव ।

अथवा तो त्यक्तलज्जः सुखी भवेत् ।

५४

**व्याल** — दुष्ट गज, भयंकर भुजंग. सरखावो : न भवति बिसतन्तुर्वारणं वारणानाम् । श्लोक ६० मो

**समुज्जृम्भते** — प्रयत्न करे छे.

**वज्रमणि** — हीरो

**संनह्यते** — तैयार थाय छे.

**सुधास्यन्दि** — अमृत स्रवनार, अतिमधुर.

**सूक्त**(सु+उक्त) – सुभाषित

सरखावो :

न दुर्जनः सज्जनतामुपैति बहुप्रकारैरपि सेव्यमानः ।
भूयोऽपि सिक्तः पयसा घृतेन न निम्बवृक्षो मधुरत्वमेति ॥

८८

**प्रसह्य** — बलात्कारथी, खूब बळ वापरीने

**मकर** — मं विषं किरति इति । मगर

**प्रचलदूर्मि॰** — प्रचलन्त्यः ये ऊर्मयः तेषां मालाभिः आकुलः तम् ।

**प्रतिनिविष्ट** — सामो थईने बेठेलो, दुराग्रहाक्रान्त, जिद्दी.

सरखावो : ज्ञानलवदुर्विदग्ध.

अने

अरण्यरुदितं कृतं शवशरीरमुद्वर्तितं
स्थलेऽब्जमवरोपितं सुचिरमूषरे वर्षितम् ।
श्वपुच्छमवनामितं बधिरकर्णजापः कृतो
धृतोऽन्धमुखदर्पणो यदबुधो जनः सेवितः ॥ कुवलयानन्द

## ५६

**सिकताः** — रेती. वालुकाः नी जेम हंमेश बहुवचनमां वपराय छे.

**पीडयन्** — घाणीमां पीलनार–पीलीने. पीड्-दबाववुं

**शशविषाण** — ससलानुं शींगडुं (असंभवित वस्तु)

बोलवानी साथे ज जे बे वस्तुओनो विरोध के असंभाव्यता स्पष्ट थाय तेने 'वदतो व्याघात' कहे छे. एवी साव असंभवित वस्तुओना दाखला नीचेना श्लोकमां एकत्र आणेला छे:

एष वन्ध्यासुतो याति खपुष्पकृतशेखरः ।
मृगतृष्णाम्भसि स्नातः शशशृङ्गधनुर्धरः ॥

## ५७

**तानि** — तान्येव.

**सकलानि** — अविकलानि

**अप्रतिहता** — अकुंठित

**उष्मन्** — गरमी, हूंफ

दाटेला खजाना उपर रहेतुं उंदर जेवुं प्राणी पण धननी गरमी (हूंफ)थी कूदको मारी खींटीए भेरवेली भिक्षानी झोळीमांथी खाई शके छे, एवी पंचतंत्रना कविए वार्ता कही छे ते अहीं याद आवे छे.

उष्मापि वित्तजो वृद्धिं तेजो नयति देहिनाम् ।

— द्वितीयं तंत्रम्

५८

**उपस्कृत** — अलंकृत, शणगारेल, संस्कार आपेल

**प्रदेय** — आपवा योग्य

**आगम** — विद्या, वेद

**विषय** — देश

**कुत्स्य** — निंद्य, हलको ( कुत्सा – निंदा परथी )

**यैः अर्घतः पातिताः** — जेमणे ओछी किंमत आंकी

**अर्घ** — किंमत, मूल्य.

सरखावो :

कनकभूषणसंग्रहणोचितो यदि मणिस्त्रपुणि प्रणिधीयते ।
न स विरौति न चापि हि शोभते भवति योजयितुर्वचनीयता ॥

— सभातरंगे

( त्रपु – सीसुं, कलाईनी धातु)

५९

**ह्रीमति** — लज्जावाळा(मां)

**मुनिः** — मूंगो, मौनसेवी

**विमतिता** — बुद्धिहीनत्व, मूर्खता

**अवलिप्तता** — गर्विष्ठपणुं

**मुखरता** — वाचाळपणुं. निन्दितं मुखं यस्य विद्यते स मुखरः । तस्य भावः तत्ता ।

**अङ्कितः** — अङ्क – चिह्न, डाघो. ते उपरथी अङ्कित – अंकयुक्त, डाघवाळुं, दूषित, वखोडायेलो.

सरखावो : मौनान्मूकः इ. श्लोक ३६.

आवी परिस्थितिमां बीजा एक कविनो नीचेनो उपदेश ज ग्राह्य छे.

विद्यते न खलु कश्चिदुपायः सर्वलोकपरितोषकरो यः ।
सर्वथा स्वहितमाचरणीयं; किं करिष्यति जनो बहुजल्पः ? ॥

अथवा :—

सर्वथा व्यवहर्तव्यं; कुतोह्यवचनीयता ? — भवभूति
को लोकमाराधयितुं समर्थः ।

६०

**अधिगतपरमार्थाः** — ज्ञानरूप परम तत्त्व जेमणे हांसल कर्युं छे तेओ

**मा अवमंस्थाः**—अवगणना करीश नहि.

ह्यस्तन भूतकाळनुं रूप मा साथे निषेधात्मक आज्ञार्थना अर्थमां वपराय छे.

**संरुणद्धि**— अटकावे छे, रोके छे, रोकी शके छे

**वारणं** — बंधन, प्रतिरोधक. **वारणः** — हाथी

६१

**गोचर** — गावः (इन्द्रियाणि) चरन्ति अस्मिन् इति – इन्द्रियोनो प्रदेश–विषय

**किमपि** — अवर्णनीय

**शम्** — कल्याण. शम्+कर – शंकर

**प्रतिपाद्यमान** — दीयमान, अर्पण थतुं

